श्रीः

उभयवेदान्तग्रन्थमाला

शतदूषणीमण्डनम्

# परमार्थभूषणम्

शतभूषण्यादिखण्डनरूपम्

श्रीपरमहंसपरिव्राजकश्रीमद्रङ्गरामानुजयतीन्द्रमहादेशि
चरणारविन्दवरिवस्याधिगतोभयवेदान्तरहस्यार्थेन
तर्कार्णवादिबिरुदभाजा वात्स्यसच्चक्रवर्तिना

अभिनवदेशिकेन
उत्तमूर्—श्री. वीरराघवाचार्येण
विरचितम्

मद्रास (14) श्रीवत्समुद्रणालये
मुद्रितम्

1959 [Rs. 25/—

# List of Books written and Published

| | | | |
|---|---|---|---|
| 1. | न्यायकुसुमाञ्जलिः विशद विस्तराख्य व्याख्यासमेतः 2 Parts | 6 | 00 |
| 2. | वैशेषिकदर्शनं वैशेषिकरसायनसहितम् | 7 | 00 |
| 3. | तर्कसंग्रहः सुखप्रवेशिनीसमेतः | 1 | 00 |
| 4. | परमार्थप्रकाशिका | 2 | 00 |
| 5. | ईशावास्योपनिदाचार्यभाष्यतात्पर्यम् | 1 | 50 |
| 6. | परमार्थभूषणम् | 25 | 00 |
| 7. | श्रीवेंकटेशकल्याणचरितम् | 0 | 75 |
| 8. | ईशकेनकठोपनिषद्भाष्यं सपरिष्कारम् | 5 | 00 |
| 9. | प्रश्नमुण्डकमाण्डूक्यभाष्यं ,, | 4 | 00 |
| 10. | तैत्तिरियैतरेय— ,, ,, | 6 | 00 |
| 11. | छान्दोग्य ,, | 8 | 00 |
| 12. | बृहदारण्यक ,, | 7 | 00 |
| 13. | श्वेताश्वतरादिपरिशिष्टोपनिषद्भाष्यम् | 6 | 00 |
| 14. | सिद्धित्रयं गूढार्थप्रकाशसहितम् | 2 | 00 |
| 15. | वेदान्तदीपः, शरणागतिगद्यञ्च with Translation | 10 | 50 |
| 15. | ந்யாஸாதிகார ஸர்வஸ்வம் | 1 | 00 |
| 17. | பெரியாழ்வார் திருமொழி ப்ரபந்தரக்ஷையுடன் | 12 | 00 |
| 18. | திருப்பாவை ,, | 3 | 50 |
| 19. | நாய்ச்சியார் திருமொழி ,, | 4 | 00 |
| 20. | பெருமாள் திருமொழி ,, | 1 | 50 |
| 21. | திருச்சந்த ,விருத்தம் | 2 | 00 |
| 22. | திருமாலை, திருப்பள்ளியெழுச்சி, அமலனாதிபிரான், கண்ணிநுண் சிறுத்தாம்பு ,, | 3 | 00 |
| 23. | முதல் திருவந்தாதி ,, | 2 | 00 |
| 24. | இரண்டாம் திருவந்தாதி ,, | 1 | 75 |
| 25. | மூன்றும் திருவந்தாதி ,, | 1 | 50 |

திவ்யப்ரபந்தங்கள் மேலே அச்சாகிவருகின்றன

இனி ஸஞ்சிகை (100 பக்கம் சுமார்) 1-க்கு ரூ. 1 50

**புத்தக விவரங்களுக்கு நேரில் எழுதிக்கொள்க.**

*Address*: **Ubhaya Vedanta Granthamaala Office**
25, Nathamuni St., T. Nagar, Madras-17.

श्रीः



# अनुगृहीतं प्रशस्तिपत्रम्

श्रीमते श्रीलक्ष्मीनृसिंहपरब्रह्मणे नमः ।

श्रीमते शठकोपाय नमः ।

श्रीमते रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

श्रीमते श्री आदिवण् शठकोपयतीन्द्रमहादेशिकाय नमः

श्रीमते श्रीवण् शठकोप श्री वेदान्तदेशिकयतीन्द्रमहादेशिकाय नमः

अस्मिन् विलम्बिसंवत्सरे मकरमासि श्रीभूमिनीलासमेतस्य भगवतः श्रीलक्ष्मीनृसिंहस्य श्रीकनकवल्लीनायिकासमेतस्य श्रीवीरराघवस्वामिनश्च सन्निधौ श्रीमत्यहोबिलमठे चतुश्चत्वारिंशे पट्टे मूर्धाभिषिक्तानां श्रीमद्वेदमार्गप्रतिष्ठा-नाचार्येत्यादिविरुदभूषितानां श्रीवण्शठकोप श्री—वेदान्तदेशिकयतीन्द्र-हादेशिकानामनुग्रहेण नवसु दिनेषु प्रवृत्ते तैरेवाधिष्ठिते तेषामेवातिविलक्ष-णाभिः विषयशोधन—चोद्यकरण —दुर्ग्रहार्थविशदीकरणभङ्गीभिः सञ्जात-हुरसपरीवाहे श्रीमद्विशिष्टाद्वैतसिद्धान्तधुरन्धरः सुप्रसिद्धैः अत्रनिर्दिष्टैः

श्री. उ. वे. व्याकरणवेदान्तपारङ्गतैः आराधकैः पनमुकै नरसिंहाचार्यैः

,, न्यायवेदान्त विशारदैः प्राचीनविद्वद्भिः तिरुक्कण्डलं कृष्णमाचार्यैः

,, ,, वेदान्तवावदूकैः विलिवलं नारायणाचार्यैः

,, ,, वेदान्तसारज्ञ—ब्रह्मविद्यावाचस्पति—श्री अहोबिल-
मठीयास्थानविद्वद्भिः पेरुक्कारणै चक्रवर्त्याचार्यैः

,, ,, पण्डितराजेत्यादिबिरुदभूषितैः D.T. ताताचार्यवर्यैः

,, ,, न्यायवेदान्तशिरोमणिभिः ईच्चम्बाडि. वीरराघवाचार्यैः

,, ,, श्रीपद्पुरीमहाविद्याशालाध्यापकैः नावल्पाक्कं राजगो-
पालताताचार्यैः

,, ,, ,, ,, कोलियालं-शठकोपाचार्यैः

,, ,, ,, मधुरान्तकंकलाशालाव्याकरणाध्यापकैः
मेलपाक्कं नरसिंहाचार्यैः

,, ,, ,, व्याकरणाध्यापकैःसरलकविभिःपादूरराघवाचार्यैः

,, ,, ,, न्यायाध्यापकैः अत्तिकृष्णमाचार्यैः

,, ,, ,, न्यायशिरोमणि पुरिशकृष्णमाचार्यैः

,, ,, ,, न्यायाध्यापकैः V.D. संपत्कुमारवरदाचार्यैः

,, ,, तञ्जाबूर-सरस्वतीमहाल्कोशालयाधिकृतैः नावल्पाक्कं
देवनाथाचार्यैः

,, ,, पूनासंस्कृतकोशसंकलनालयाधिकृतैः न्यायव्याकरण-
वेदान्तशिरोमणिनावल्पाक्क. रामानुजार्यैः

अन्यैश्च शताधिकैः विद्वद्भिः परिभासुरे श्रीमालोलविद्वत्सदसः अष्टादशे अधिवेशने-- श्रीरङ्गराजदिव्याज्ञालब्धवेदान्ताचार्यपदस्य सर्वतन्त्रस्वतन्त्रस्य कवितार्किकसिंहस्य आचार्यचूडामणेः, तदनुगृहीतस्य परमगम्भीरस्याद्वैताद्रिभेदनशतधारस्य शतदूषणीग्रन्थस्य च अपारं महिमानं अनधिगतवता आबाल्यात् विशिष्टाद्वैतमतदूषण-तत्परग्रन्थलेखनाभिनिवेशग्रहविवशचेतसा म-म-श्री अनन्त-कृष्णशास्त्रिणा शतदूषणीखण्डनतृष्णया अचिरात् प्रकाशितस्य शतभूषणीनामकस्य ग्रन्थस्य खण्डनरूपः तर्कार्णवेत्यादिबिरुदावलीभूषितैः नानाशास्त्रसंबन्धिबहुग्रन्थनिर्माणप्रकटितलोकोत्तरपाण्डित्यैः उत्तमूर्-श्री-वीरराघवाचार्यवर्यैः विरचितः परमार्थभूषणनामा सहस्राधिकपुटव्यापी महाग्रन्थः विदुषामङ्गीकाराय समर्पितः।

तत्र ग्रन्थकारैरेव सभाध्यक्षनियमनानुसारेण पठितान् कांश्चन भागान् आकर्ण्य संतुष्टाः श्रीसभाध्यक्षाः आचार्यचरणाः, समवेताः सर्वे विपश्चितश्च ग्रन्थकाराणां अगाधं नानाशास्त्रवैचक्षण्यं ग्रन्थकरणदाक्ष्यं सकलप्राचीनाद्वैतग्रन्थगाढपरिचयं पूर्वपक्षानुवादे उत्तरदाने चावलम्बितमार्जवातिशयं हेलया परपक्षविधूननचातुर्यं पदवाक्यशुद्धिं रचनासौष्ठवम्, अरागद्वेषकलुषहृदयत्वम् अपरुषभाषित्वं च सुव्यक्तमालक्ष्य अभ्यनन्दन्।

एवमस्मत्सिद्धान्तसंरक्षणदीक्षिता इमे आयुरारोग्यैश्वर्यसमृद्धिमन्तः शरदः शतं विलसन्तु इति भगवति लक्ष्मीनृसिंहे अञ्जलिञ्चाकुर्वन्।

(Sd.) ஜோ. ரங்காசார்யார்

Srikaryam (*Private Secretary*),

**H. H. Ahobilamatt.**

## A TRIBUTE

When information was received that 'Satabhushani' was published in refutation of the arguments of Sri Vedanta Desika in his "Sata-Dooshani" against the Advaita doctrine, there was generally a stir among the Vaishnavites, who considered it a challenge to their doctrine and Sampradaya and they resolved that a reply should be given. They entrusted the task into the capable hands of Sriman Uttamur Veeraraghavacharya Swami. Subscriptions were also collected. When the work was some way through its progress was retarded by want of sufficient financial assistance, and so an appeal was made to Sri Van Sathakopa-Sri Vedanta Desika Yatindra Maha Desika, (present Alagiya Singar) of Sri Ahobila Mutt. The response was *ready and quick and a cheque for Rs. 5,000/- was received, which eased the situation considerably and helped to the completion of the work. The Visishtadvaitic world is extremely grateful to His Holiness Sri Alagiasingar for his great love of learning and his generous patronage.

K. BHASHYAM

---

**The matter in the enclosed Srimukha is as follows :—*

"ஸ்ரீ அழகியசிங்கர்பூர்வாசிரமத்திலேயே ஸ்ரீ உத்தமூர் ஸ்வாமி சதபூஷணிக்குக் கண்டனம் எழுதுவதாகத்தெரியும். அப்பொழுதே புஸ்தகத்தை அச்சிடும் சமயம் ஸ்ரீ அழகிய சிங்கர் சன்னிதியில் விக்யாபனம் பண்ணி அதற்கு வேண்டிய ஒத்தாசை செய்யவேண்டும் என்று திருவுள்ளம் பற்றியாயிற்று. இப்பொழுது தேவர் மிக வியாபரித்து அந்த கிரந்தத்தை அச்சிட்டுக்கொண்டு வருவது ஸ்ரீ திருவுள்ளத்துக்கு ரொம்ப சந்தோஷம். மீதி அச்சிட ஸ்ரீஸன்னிதியில் ஏற்றுக்கொள்ளவேண்டும் என்றும் அதற்கு ரூ. 5,000/- அவசியம் தேவையென்றும் எழுதிய படி.....................,...உடனே அனுப்பிக்க வேண்டும் என்று நியமனம் ஆனபடியால் தேவரீர் பேருக்கு ரூ. 5000/-க்குச் செக்கு அனுப்பப்பட்டிருக்கிறது."

श्रीः

# भूमिका

---

"श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥"

जयति भगवन्नाथार्याद्यैर्निराकृतशाङ्कर-
प्रभृतिविमतैर्व्यासोपज्ञं मतं व्युदपादि यत् ।
प्रगुणभगवद्योगीन्द्रोक्तिस्फुटोपचितं कृतं
स्थिरतममिदं श्रीमद्वेदान्तदेशिकसूक्तिभिः ॥

प्रथमो गुरुरेष वेङ्कटेशः परमेष्ठिप्रणतो हयाननः प्राक् ।
निगमान्तगुरूत्तमोऽवतीर्णः निपुणं नैजममतैकरक्षणाय ॥

भगवता बादरायणेन, "तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः । तत्त्वमेको महायोगी हरिर्नारायणः परः ॥", "आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा" इति महाभारते स्वसंगृहीततत्त्वहितवैशद्यविधायि वेदान्तवाक्यमीमांसात्म शारीरकं शास्त्रं न्यबन्धि । भगवता च बोधायनेन शारीरकसूचित बादरिजैमिन्याश्मरथ्यौडुलोमिकाशकृत्स्नादिविविधमहर्षिहृदयोद्घाटनपूर्वकं तेषां बादरायणस्य च विमतिसंमतिविषयविशोधनेन बादरायणनिष्कर्षबोधाय नः प्रतता वृत्तिः प्रणिन्ये । एवं प्राप्तप्रचारस्य सिद्धान्तस्य सारस्वतस्य स्रोतस इवाऽऽविर्भावतिरोभावयोः पदेपदे स्थितयोः कालक्रमेण ब्रह्मनन्द्यादयः पुनः प्रचारे प्रायतिषत ।

अथ च अर्वाचीनैः श्रीशङ्करभास्करयादवप्रकाशैराचार्यैरसंपन्नसामग्र्यैरनेकानि अद्वैतमतान्युत्प्रेक्षाञ्चक्रिरे । तत्रैवं प्राज्ञमणयः तत्तद्भाष्यादिग्रन्थपरि-

शीलनशालिनः प्रब्रुवन्ति—प्रादुर्भूतेषु परश्शतेष्वाचार्येषु श्रीशङ्कराचार्यस्य तावदनन्यसामान्यं मननम्, यदयमाश्मरथ्यादिवन्न बादरायणोऽपि कस्मात् कचिन्नोपेक्ष्येत; अस्मदालोडनवैदेशिकत्वे स निगमदेशिकोऽपि न देशिक इति निगूढमाशिश्ये। एवम्भूतः सर्वस्य महाजनस्य बादरायणपरायणतामालक्ष्य तान् आत्मसात्कर्तुकामः प्राचीर्वृद्धीर्व्याख्या उपेक्ष्य, स्वातन्त्र्येणोपनिषदः सर्वाः स्वयं व्याख्याय स्वमते बादरायणमपि निवेशयितुमनाः शारीरकभाष्यमपि किञ्चिदभाषिष्ट। तत्त्वमिदमाकलय्यैव भगवद्रामानुजस्वामिपादाः प्राचीनव्याख्यानान्येवोपनिषदां पर्याप्तप्रायाणीति, शारीरकव्याख्यया श्रीभाष्येणैवोपनिषदो व्याख्याता इति च पृथक्प्रयत्नं तत्र न तेनिरे। व्यक्तमिदं कार्याधिकरणानन्दमयाधिकरणादिषु शाङ्करभाष्यं स्थूलधिया पश्यतामपि, सूक्ष्मदृष्ट्या तु प्रायः सर्वत्र यदेष श्रीशङ्कराचार्यः स्वातन्त्र्येण सर्वमन्यथयामासेति। तत्र स्वातिरिक्तं किमपि नास्तीति, अस्याचार्यस्य हृदयम्। प्रतिचेतनमेवं प्रत्यवस्थाने स्वमतासिद्धिमनुदृश्य सर्वोपि चेतनः सहेश्वरेणाहमेवेति आत्मैक्यं तदर्थमास्थित। तेन शून्यवादीव सर्वमिथ्यात्वं संगीर्णवानपि तद्वैलक्षण्यं किञ्चिदात्मनि प्रदर्श्य आत्मनो वैदिकत्वं प्रकटयामास—इति।

तदेतत् जगन्मिथ्यात्वं सांख्य-योग-न्याय-वैशेषिक-पाशुपत-पाञ्चरात्र-पूर्वतन्त्र-श्रीमाध्वादिभेदभिन्नाः द्वैतिन इवाद्वैतिनोऽप्यन्ये न सेहिरे। तेन श्रीभास्करयादववल्लभाचार्यादयः तन्मतखण्डनं सम्यगेव विधाय शारीरकमन्यथा व्याचख्युः। बाह्येषु बौद्धं वैदिकेषु शाङ्करश्चेत्युभयत्रैव जगतो मिथ्यात्वम्। द्वैते च अद्वैते च श्रौते संप्रतिपत्तव्ये यादृशी निरूपणसरणिः सर्वसमकण्ठतां स्वरसतः संपादयति, यादृशीं श्रुतिरेव स्वयं समकण्ठतासंपत्तये स्वरसत आविष्करोति, तां सरणिं विहाय तैस्तैरन्यथासामरस्योल्लेखनम्, नूनं देवताप्रीतिं श्रौतीं परित्यज्य स्वर्गसंपत्तये यज्यर्थादपूर्वकल्पनामधमीमांसकप्रपञ्चितामनुकरोतीति विभाव्य श्रीभगवद्रामानुजस्वामिचरणैर्बादरायणबोधायननाथयामुनादिनिबन्धानुरोधेन विशिष्टाद्वैतमेव प्रतिष्ठापितमासीत्।

तत उपशान्तेष्वपि यादवप्रकाशादिषु चिरप्ररूढवासनाविशान्तकरणैः शाङ्कराद्वैतानुसारिभिः साटोपं प्रत्यवतस्थे । एवं वादकोलाहलमात्रेणानुपरम्य यदेमे अद्वैतिनः श्रीशङ्कराचार्यपूर्वकालप्रभृति भुवि भूम्ना प्राप्तप्रचारम् , शाङ्करभाष्ये पाञ्चरात्राधिकरणादावनुमोदितम् , श्रीभगवद्रामानुजस्वामिपादैः परिष्कृत्य भूयः स्थापितं श्रीविष्णुदेवालयपूजाविधिमपि विश्लथयितुमुद्युयुजिरे, तदा सर्वतन्त्रस्वतन्त्रकवितार्किकसिंहश्रीमन्निगमान्तमहादेशिकादिभिस्तत्प्रतिष्ठापनमध्यवसितवद्भिः परमतदौःस्थ्यप्रपञ्चने भूयान् कटाक्षः कृत आसीत् । तदात्वे शतदूषणीप्रभृतीनामद्वैतिमतङ्गजसिंहनादसोदराणां निबन्धरत्नानामाविर्भावः । कालक्रमेण श्रीमध्वाचार्यतदनुयायिभिर्द्वैतैकपक्षावलम्बिभिरद्वैतग्रन्थेष्वनिमात्रखण्डनगोचरीकृतेषु, तत्खण्डनोद्युक्तेषु च तत्र तत्राद्वैतिषु, विशिष्टाद्वैतग्रन्थोपरि स्वहृदयविसंवादिव्याहारग्रथनवैमुख्येन ग्रन्थनिर्माणादुपरतेषु महृदयाद्वैतिसज्जनेषु, तथापि कतिपयेष्वभ्यसूयुषु अभिनिवेशिषु आग्रहयालुषु सिद्धान्तसिद्धाञ्जनाद्युच्चावचाक्रोशवचनजटिलव्याहतग्रन्थविलेखनव्यवसायिषु पश्चादुपलब्धेष्वपि अद्वैतमते असारत्वबुद्धिरेवाभिवृद्धिमलभत ।

तामिमामात्ममतस्थितिमसोढवद्भिरर्वाग्भिरद्वैताचार्यैः शतदूषणीप्रभृतिप्रबलग्रन्थखण्डनप्रकटनं विना न स्वमतगौरवाभिमानसंपादनप्रसक्तिरित्याकलय्य माकिं चत्वारिंशतो वत्सरेभ्यः प्राक्कालप्रभृति रहस्येवमुपन्यसितुं प्रावर्ति— 'अद्वैताचार्यविद्यारण्यसमकालिकैः तत्सुहृत्तमैः राजसंमाननां प्रापयितुं तदाहूतैरपि वैराग्यपञ्चकप्रेषणेनोपरतैः परमैकान्तिप्रथमोदाहरणभूतैः श्रीमन्निगमान्तमहादेशिकैर्निबद्धः शतदूषणीग्रन्थः खलु समसामयिकैर्विद्यारण्यादिभिरिव पाश्चात्यैरप्यद्वैतिविपश्चिद्भिरखण्डित एव वरीवर्तीति महदिदं विषादस्थानमस्माकम् । प्रत्येकमशक्तैरपि संभूयात्र संरब्धव्यम्' इति। एवं खण्डनग्रन्थनिबन्धननिर्बन्धः श्रीकामकोटिपीठालङ्कर्मीणायतनशङ्कराचार्यादिभिरनुपदं क्रियमाण आसीदिति च ब्रह्मश्रीविद्वद्वरवैद्यसार्वभौम-करूरभिजनरामशर्ममहोदयमुद्रिते तत्पितृचरणविरचितभामतीव्याख्याने भूमिकायां व्यक्तम् । किं सुदूरगमनेन । प्रकृतशतभूषणीग्रन्थ-

भूमिकैव श्रीकामकोटिपीठाधीशप्रोत्साहनं पदेपदे प्रस्तारेण दर्शयति— 'आचार्यचरणानां........भगवत्पादापरावताराणामाज्ञामात्रं प्रबलमवष्टभ्य', 'आदिभगवत्पादापरमूर्तयः श्री चन्द्रशेखरसरस्वतीचरणा एव एतद्ग्रन्थस्य कर्तारः। अहं तु—निमित्तमात्रम्' इत्यादि तद्भूमिकायां द्रष्टव्यम्। स्वयं कर्तृप्रायत्वादेव पृथक् ते श्रीमुखं नार्पयन्निव। अशेषजनाभिनन्दनीयमेव तावत् अद्वैषेण स्वमतस्थापनैदम्पर्यमाचार्याणाम्। अतश्च शतभूषणीकृतो महाशयात् साक्षादपि। एवम् अस्मदीयवैशेषिकरसायनग्रन्थाभिनन्दनसदसि च स्वस्वमतस्थापनार्थप्रवृत्तिः सर्वेषां समुचितेति सैवैरेभिरुपन्यासि।

एवमेतत्खण्डनसंरम्भं वोढुमादिष्टाः उपदिष्टाः प्रार्थिताश्च बहवः, "प्रच्छन्नबौद्धविजये परितो यतध्वम्" इति सूक्तिमसहमानाः पण्डिताः ग्रन्थखण्डनस्यासिद्धावपि संमाननाप्राप्तिरस्तीति समुत्सुकाः, ज्ञायते, शतदूषणीशातनादिनामकरणपुरस्सरं प्रबन्धने प्रायस्यन्। तानिमान् ग्रन्थान् अद्वैतमतविशेषाग्रहप्रदर्शनमात्रविश्रान्तान् अपूर्णांश्च आलक्ष्य अद्वैतिपरिषत् अन्यान् ग्रन्थान् उपेक्ष्य तान् उत्पन्नविनष्टान् विधाय शतभूषणीग्रन्थमात्रस्य प्रचारं कर्तव्यमध्यवस्यति स्मेति वदन्ति स्म। अद्वैतपीठाधिपतिपरिषदादिप्रेरणपारवश्येन संभृतेष्वपि पण्डितेषु अद्यापि केषाञ्चिदियं बुद्धिरनुवर्तमानाऽस्ति—यत् शतभूषण्यां खण्डितायामपि पश्चात्र मूकीभूय स्थातुं साम्प्रतम्। तदा शतदूषणीशातनार्थे ग्रन्थान् खण्डशः प्रकटयिष्यामः। ग्रन्थसंख्याभूयस्तादर्शनमात्रेणापि मतं महीयो मन्यमानाः किल साम्प्रतमपि सन्ति। परमतखण्डनशौण्डीर्यषण्डतायां सर्वत्र 'शतभूषण्यादिग्रन्थेष्वविशिष्टायां किमित्यास्माकग्रन्थानां परमित्थमप्रकाश इतीति चाहुः। एवमध्यवसायवद्भिरप्यद्वैतीभूय शतभूषणीग्रन्थः प्राकाश्यं प्रापि सर्वाद्वैतपण्डितप्रशंसापत्रकदम्बकरम्बितः।

प्रबन्धोऽयमाबाल्यात् अद्वैतग्रन्थलोडनेनैव क्षिप्तकालस्य, वैयक्तिकविद्वेषवैदेशिकस्य, तत्तन्मतमातिष्ठमानैः स्वस्वमतस्थापनार्थं निबन्धनं न्याय्यमिति सदध्यवसायस्य, नानाग्रन्थमुद्रणनिर्माणभूमिकालेखनव्याख्यानादिना विख्या-

तस्य महामहोपाध्यायस्य सर्वसुहृदोऽस्मत्सुहृत्तमस्यास्मदभ्युदयैककाङ्क्षिणो महामनसोऽखिलबुधक्षेमकामस्य अनन्तकृष्णशास्त्रिमहोदयस्येति अद्वैतिनामिवा-स्माकमपि तत्राभिमानः, प्रणेतरि बहुमानश्च तुल्यरूपमात्मानमलप्साताम् ।

प्राप्यमाणप्रचारश्च शतभूषणीग्रन्थमिमं पश्यद्भिर्विशिष्टाद्वैतपण्डितैरुपेक्ष-णीयकोटावेवायं न्यक्षेपि । तथापि प्राप्तस्य परिहरणं पामरलोकभ्रान्तिनि-वर्तनाय कार्यम्; अल्पोऽपि व्याधिराशङ्कास्पदमारोग्यकामैरादावेवाभावं गमयितव्यः; अद्यत्वे नूतनमपि आयत्यां पुरातनमिति आरोपितगौरवं भवेत् इत्यध्यवसाय खण्डनग्रन्थदर्शनक्रमानुसारेण प्रथमं परमैकान्तिप्रधान-सर्वशास्त्रपा-रदृश्व-सच्छिष्यबृन्दसेव्यमान-चतुर्वेदशतक्रतु-नावल्पाक्काभिजन-महनीय **श्रीनृ-सिंहाचार्यस्वामिपाद**विहितम्, अथास्मदाचार्य विश्वप्रसिद्ध-सच्छिष्यबृन्दसे-व्यमान-परमहंसपरिव्राजकाचार्य-परपक्षनिराकृति - भेदसाम्राज्यादिप्रबन्धनिर्माणा-लङ्कर्मीण**श्रीरङ्गरामानुजमहादेशिक**विहितश्च निदेशं नतेन शिरसा सगौरव-मवतंसयन् शतभूषणीग्रन्थसंदर्शनायायतिषि । गतेषु कतिपयेषु मासेषु मान्येन ग्रन्थकर्त्रैव सुहृत्तमेन शुद्धेनैव हृदयेन सर्वमतयुक्तिवैशारद्यविजिज्ञासामात्रेण विशिष्टाद्वैतसिद्धान्तानुसारिग्रन्थप्रबन्धनाय स्वग्रन्थार्पणपूर्वकं सम्यक्प्रेरितश्चाभू-वम् । 'जानिवन् मतमाजन्ममरणमनुवर्तमानं न भवति । तदानदा परिशील्य निकृष्टं परित्यज्य प्रकृष्टमेव परिग्राह्यन् । अतो मतग्रन्थानामुपर्युपरि प्रादुर्भावः पश्चात् ताटस्थ्येन परिशीलयतां परमार्थोपकाराये'ति सर्वसंमन्तव्योऽयमर्थः अस्मत्कृत-परमार्थप्रकाशिकाया अद्वैतानोदपरीक्षारूपाया: भूमिकायामेवार्जवेन प्राङ्न्य-वेदीति, तदनुरुध्य, अस्मत्सुहृदामत्र हृदयोद्रेकस्य न मनागपि प्रसक्तिरिति विस्रम्भेण शतदूषणीवास्तवार्थविज्ञापनशेषतया परमतदौःस्थ्यप्रपञ्चनं प्राप्तकाल-मचिन्तयम् । तत्र शतभूषणीग्रन्थमिमं केवलं व्याजीकृत्य प्राक्तनास्तदादृताः भाष्य-इष्टसिद्धि ब्रह्मसिद्धिभामत्यद्वैतसिद्धिपरिमलब्रह्मानन्दीयखण्डनखण्डखाद्या-दयोऽपि ग्रन्थाः प्रसक्तौ सत्यां यथावत् खण्डनीया इति तदनुगुणग्रन्थलेखने उत्साह उदभूत् ।

तावदेव यैरखण्ड्यपाण्डित्यप्रकर्षैराचार्यश्रीदेशिकचरणारविन्दभक्तिमूर्तिभिरनेकमतविद्वदाचार्यैरर्थमपि मुद्रणप्रारम्भोपयोगिनं गूढमर्पयित्वा अहमत्यादरेण संप्रेरित आसम्, तेषाम्, तदनु स्थूलमल्पञ्चोपकारमाहितवताम्, आधास्यताञ्चान्येषां महतां मध्ये महाहारमध्यायमाने नायकमणीभूय निरुपप्लवममिम एव राजन्ते महामान्याः प्रख्यातपाण्डित्याः परमार्थोपदेशवशीकृतविशिष्टलोकाः **श्रीमल्लक्ष्मीनृसिंहास्थानमूर्धाभिषिक्ताः** परमहंसपरिव्राजकाचार्याः श्रीभगवद्रामानुजदर्शनस्थापनाचार्यतल्लजाः **श्रीवण्शठकोपश्रीवेदान्तदेशिकयतीन्द्रमहादेशिकाः** अभ्यर्थनानन्तरक्षणे **अनुगृहीतरूप्यकसहस्रपञ्चकाः** आचार्यग्रन्थरक्षणेनान्वर्थीकृतनिजनामधेया इतीदमवश्यनिर्देश्यमद्यत्वे निर्दिशामि। विस्तरेण तु दातृपट्टिकायामन्येषामपि यथावन्निर्देशः क्रियते।

यावज्जीवं कृतज्ञोऽहमीदृशेषु महात्मसु।
प्रकृष्टमतसद्ग्रन्थप्रकाशैकान्तदृष्टिषु॥

एवमस्मिन् ग्रन्थे खण्डनार्थं गृहीतेऽन्येपि केचिद्ग्रन्थाः[1] प्रचारमानीताः। परंतु तेषामानुपूर्व्या किञ्चिद्ग्रन्थखण्डनरूपत्वाभावात् फल्गुत्वात् अत्यन्ताग्रहमूलत्वात् अस्मदीयैस्तत्तत्र सम्यक् खण्डनप्रवृत्तत्वाच्च शतभूषणी प्राधान्येनेह गृह्यते। प्रसङ्गादेतदीया एव श्रीभाष्यसमालोचनाद्वैततत्त्वशुद्ध्यादयोऽपि स्पृश्यन्ते स्थालीपुलाकनीत्या। अयथानुवादासंगतदूषणादिमयत्वात्तु तेषां तत्खण्डनेन कालहरणं विवेकिनामभ्यर्हितकार्यव्यग्राणामनुचितमिति प्रायो वयमुपेक्षामहे।

एतदीयो वेदान्तरक्षामणिनामा ग्रन्थः श्रीभाष्यसमालोचनरूपः सिद्धान्त कौस्तुभनाम्ना अस्मदीयेन ग्रन्थेन प्रागेव खण्डितः। परन्तु म. म.

1. द्राविडालयदर्शनम्, चिदचिदशरीरकब्रह्मसिद्धिः, सप्तविधानुपपत्तिपरीक्षा अद्वैततत्त्वशुद्धिश्च।

श्री ए. वी. गोपालाचार्यमहाशयादिप्रणीतप्रकटितग्रन्थत एव॰ तत्खण्डन सिद्ध्या द्रविणसंपादनप्रयासमालोच्य स मुद्रणपदं नानायि। अथापि तत्रोक्ताः कतिपये विषयाः अस्मन्मुद्रितनयद्युमणिभूमिकायाँ प्राकाश्यं प्रापिताः। केचिदत्र ग्रन्थे संयोजिताः। शिष्टमावश्यकत्वे पृथगपि मुद्रयिष्यते।

प्राज्ञा महान्तः, सुहृदः, तथाऽन्येऽप्यनुबन्धिनः।
परग्रन्थप्रतिक्षेपप्रवृत्ता इत्युदास्महे॥

वस्तुतः संप्रति मतखण्डनप्रवृत्तैरिदमादाववधेयम्—किमिदं युक्ति प्राधान्येन प्रमाणयति, उत शब्दम्। शब्दश्च श्रुतिः अन्यो वा। श्रुतौ च तन्मतस्थापनमुख्योपयोगिवाक्यं किं कियत्। तत्र बाधकं किं कियत्। तत्तदितरमतसाधारणे वाक्ये तद्वादानुयायिवर्ण्यमानार्थरीतिः कीदृशी। मतोपयोगित्वाभावेऽपि वाक्यार्थवर्णनपरिपाटी स्वरसा न वेत्यादि। तत्र वृथाकालहरणपरिहरणाय प्रधानांशदूषणमात्रं पर्याप्तम्। अत इतः परमेवं ग्रन्थमथनमेव युज्यते। सर्वसुग्रहया भाषया परमतदौःस्थ्यप्रकटनं वा। आस्तामेतत्।

शतभूषणीग्रन्थोऽयमनेकाद्वैतग्रन्थभागान् अनुवदन् अस्मत्प्राच्यग्रन्थेषु खण्डनायानूदितानामंशानां प्रायेणाऽऽकरमर्थात् प्रदर्शयतीति परमिदं प्रमोदस्थानम्। ग्रन्थेऽस्मिन् पदेपदे पदवाक्यापभ्रंशानन्वयादिदोषबाहुल्येऽपि विषयविशोधनैकप्रवृत्तेन मया नातीव तत्र दृष्टिर्व्यधायि। व्यक्तिदूषणवैयग्र्यविरहिणाप्यनेन तत्रतत्र ग्रन्थमध्य इव भूमिकायामप्याचार्यनिन्दावाक्यानि ग्रथितान्येव तु वीक्ष्य विषीदामः; वेदान्तविषयमात्रे स्वगर्भस्थित्वा स्वापरिचितश्रीदेशिकग्रन्थसंख्यानाद्यनावश्यकार्थविस्तरविधानव्यसनिना किमिति शास्त्रिमहाशयेन स्वात्मा परोपहासपात्रीकृत इति च। ईदृशेषु हि विषयेष्वन्यदीयेषु अन्येषामज्ञत्वमवश्यम्भावि। इदमेव ज्ञापयितुमस्माभिर्ग्रन्थप्रवेश एवं न्यबन्धि, "अज्ञत्वस्य दृढीकृत्यै" इति। एवमपि शास्त्रिवरम्य यादृशि निन्दाक्षराणि, तादृश्यपि मा भूवन्निति विषयविवेचनमात्र एवाहं दृष्टिमर्पयन्नस्मि।

एष परीक्षकः शुद्धमुद्रणं शतदूषणीग्रन्थं द्रष्टुमलब्धावकाशः अशुद्धवाक्यानि यथाभूतानि मत्वा वृथैव बहु लिखति, शुद्धवाक्यानामपि श्रुतानां यथावस्थितमर्थं नावबुध्यते, पूर्वापरग्रन्थशैलीं न परिशीलयति, आपादचूडं वादमेकैकमनुद्दश्य विवेचने कार्ये संरम्भं वहति, स्वानुकूलान् प्रतिकूलांच सर्वान् शतदूषणीविकल्पितान् कल्पान् स्वयं समर्थयितुं यतते, खण्डितस्वप्राच्यग्रन्थोक्तार्थानुवादमात्रेण दूषणोद्धारं कृतं मन्यते, तत्रतत्र प्रतिवादं स्वपक्षं मनागुपन्यस्य, 'एतेनायं शतदूषणीभागो व्याख्यातः, एतेनायमित्येवं लेखनमात्रेण समग्रं ग्रन्थं खण्डितं कलयति, खण्डनकारादिग्रन्थेषु शतदूषण्या सम्यक् खण्ड्यमानेषु तदंशाविवेकेन खण्डनादिग्रन्थानुवादेनापूर्वार्थप्रदर्शिनमात्मानमध्यवस्यति, श्रीभाष्यमतमिदमित्यविज्ञाय च स्वबुद्धिकल्पितं किञ्चिदारोप्य दूषणं विस्तृणाति । वादनामान्यथाग्रहणमपि शतभूषण्यां दृश्यते, ब्रह्मणिशब्दवृत्त्यनुपपत्तिरिति प्रथमवाद एवान्यथाग्रहणम् । एवं दृश्यसंबन्धानुपपत्तिः, कार्यान्यथानुपपत्तिरित्येवम् । न चास्माभिरिव शीर्षकादीर्घत्वायार्थाविरोधेन कृतोऽयमन्थाभावः; अयं भेदवहनामभेदकल्पनानुगुणं प्रथमवाद एवाप्रस्तुतानेकविषयप्रवेशनेन वादसंकरविधानात् । प्राचीनाः अद्वैतिनः प्रायः पङ्क्त्यर्थं यथावदवबोद्धुं तत्र यदंशे स्वयं किञ्चिद्वक्तुमपारयन् तत्र किञ्चित् कर्तुञ्च व्याप्रियन्त ; अयं तु अनवबुध्यैवार्थमाटोपेनायथायथप्रपञ्चनेन कार्यं साधितं मन्यते । अत एतन्मात्रदूषणेन न कालः क्षेप्तव्य इति परिशील्य परमार्थभूषणग्रन्थोऽयमित्थमवतार्यते, यथाऽयं न केवलं शतभूषणीग्रन्थस्य, न चैतत्समानकर्तृकवेदान्तरक्षामण्यादिमात्रसनाथस्य, न चैतत्सुहृज्जनविहितसाम्प्रतिककतिपयग्रन्थमात्रयुक्तस्य, किं तर्हि अद्वैतसिद्ध्यादिप्राचीनानेकाद्वैतग्रन्थजातस्यापि खण्डनरूपः सन् अद्वैतसिद्धान्तस्थसर्वविधदौःस्थ्यदर्पणायमानः सूक्ष्मधियां प्राज्ञानामाराधनात् विशिष्टाद्वैतसिद्धान्तसुधारससमास्वादनाच्चाशेषमनीषिजनानुग्रहभाजनमिमं जनं करिष्यति ।

विष्णुशिववैषम्यविचारविरहितेऽप्यत्र प्रबन्धे स्वयं प्रसक्तिं विधाय

शिवद्रोहित्वेन पदेपदे वैष्णवान् विनिन्दत्ययमिति च तत्रापि किञ्चिदस्माभि-स्तत्रतत्र व्यापृतम्। विशिष्य तद्विमर्शश्चावसरे भविष्यति।

अत्र शतभूषणीकृता शतदूषण्यन्तिमवादमादौ परीक्ष्य पश्चादेव यथाक्रमं परीक्षाप्रवर्तनात् इहापि परमतेऽसूत्रस्वारस्यभङ्गपरीक्षैव प्रथमं परिशीलिता। अथ यथाक्रमं सर्ववादपरीक्षाः। तत्र निष्प्रपञ्चीकरणनियोगभङ्गवादम्, अलेपकमतभङ्गवादञ्च न परीक्षते श्रीमदादिशङ्कराचार्येष्टोऽयमयं भङ्ग इति कृत्वा। अस्य वादद्वयस्येवान्येषामपि केषाञ्चित् वादानां परीक्षणमकृत्वा श्लाघनं जोषम्भावावलम्बनं वा शतभूषणीकारस्य साम्प्रतम्। यतः, ऐकशास्त्र्यसमर्थनम्, बाधितानुवृत्तिभङ्गः, विविदिषासाधनत्वभङ्गः, शब्दजन्यप्रत्यक्षभङ्गः, सन्मात्रग्राहिप्रत्यक्षभङ्गः, भेददूषणनिस्तारः, ब्रह्माश्रयाज्ञाननिरासः, जीवन्मुक्तिभङ्गः, जीवेश्वरैक्यभङ्गः, भावरूपाज्ञानभङ्गः, जीवाज्ञानभङ्गः, मायाविद्याविभागभङ्गः इत्येवम्भूता अंशाः अद्वैतिषु मुख्यभूतानां केषाञ्चित् संमता एव। भावाभावविलक्षणाज्ञानवादी हि भावरूपतां तस्य नानुमंस्यते। एवमन्यत्। तत्रतत्र वादे तस्यतस्य तत्संमतत्वमस्माभिरदर्शि च। यदि विरुद्धत्वेऽप्यद्वैत्यभिमतिमात्रेण तत्राऽऽदरः, स पूर्वस्मिन् वादद्वयेऽपि समानः। श्री शङ्कराचार्यानिष्टत्वे च तस्य, शिष्टेष्वपि एकतरपरिशेषणे प्रयतनीयम्। अत इतः परमद्वैतिनः सयूथ्यकलहसमापतितामव्यवस्थामपोहितुं संभूय समुचितकोटिपरिग्रहेण तदतिरिक्तदूषणं शतदूषणीकृतं शिरसा श्लाघितुमेव कृतमनीषाः स्वाभिमताद्वैतसरणिमेकेन प्रबन्धेन प्रदर्शयितुमर्हन्ति। तद् विहाय विरुद्धनानावादाभिरतौ च शरीरशरीरिभावादिकमपि नाद्वैतबाधकं जीवेश्वरादिवदिति कृत्वा तद्दूषणादुपरन्तुमर्हन्ति।

ग्रन्थोऽयं श्रीभाष्ये विशिष्य जिज्ञासाधिकरणगतस्याद्वैतमतखण्डनभागस्य, तथा समन्वयारम्भगापशूद्राधिकरणगतस्य च विवरणरूपः। प्रायः श्रीभाष्यश्रीसूक्तिक्रमोऽप्यनुरुध्यते, अनूद्यते च श्रीभाष्यसूक्तिरपि तत्रतत्र वादान्ते। तत्राध्यात्मशास्त्रारम्भे ब्रह्मनिबन्धनं समुचितमिति ब्रह्मशब्दवृत्त्यनुपपत्तिवादः

प्रथमं समयोजि। अथ ब्रह्मजिज्ञासाशब्दघटकजिज्ञासापदार्थानुपपत्तिर्न्यरूपि ; लघुपूर्वपक्षमहापूर्वपक्षविषययोः पृथगत्र दूषणग्रन्थे वक्तव्यत्वाभावात् अष्टमवादान्तेन लघुसिद्धान्तविषयं समाप्य नवमे महासिद्धान्तविषय उपक्रान्तः। शतभूषणीकारस्तु भूमिकायां प्रकारान्तरेणापि विषयविभागं परिकल्प्य तदनुरोधेन शतदूषणीदृष्टक्रममुल्लंघ्य क्रमान्तरेण कञ्चित् वादं केनचिद्वादान्तरेण योजयन् अन्यथा संकलनमपि दर्शयति। तत्रौचित्यानौचित्यविमर्शो व्यर्थ इत्युपेक्ष्यते। श्रीभाष्यानुरोधित्वात् शतदूषण्याः दृश्यमानः क्रमो नैवानादृत्यः। इदमप्यवधेयम्—यत् सर्वत्र ग्रन्थेषु यं क्रममवलम्ब्य निरूपणं कृतमस्ति, तत्र संगतिरस्ति न वेत्येतावदेव विमृश्यम्। विधान्तरेणापि विवेचनं संभाव्यत इत्येतत् न विहितविवेचनक्रमभङ्गे प्रभवति। अन्यथा पूर्वोत्तरमीमांसादिष्वप्यधिकरणरचनाक्रमेषु बहुलमन्यथाक्लृप्तिसंभावना सुलभा। श्रीभाष्योपन्यस्तविषयविमर्शेऽवतीर्णैः कैश्चित् अद्वैतिभिः वादावसरे श्रीभाष्यगत्यानुपूर्व्येण विषयशोधने क्रियमाणेऽपि यत्र प्रसङ्गादन्यदपि अन्यत्रनिरूप्यमपि प्रकृतानुषङ्गाद्विचिचारयिषितमासीत्, तत् तत् तत्रैव अवसरप्रतीक्षामविधाय विवेचयितुमुद्दिष्टमाचार्यचरणैरित्यपि तावन्मन्तव्यम्। अत एव विषयान्तरनिरूपणव्यापृत्या, पुनः प्रसक्तिप्रतीक्षयैव किञ्चिदन्यदा वक्तव्यमापतितमित्यपि संभाव्यते। सन्मात्रग्राहिप्रत्यक्षभङ्गात् द्वादशादनन्तरमेव सप्तचत्वारिंशो विकल्पाप्रामाण्यभङ्गवादो घटयितुं शक्यते ; पञ्चमाद् बाधितानुवृत्तिभङ्गवादादनन्तरं जीवन्मुक्तिभङ्गवाद एकत्रिंशः; पञ्चत्रिंशात् तिरोधानानुपपत्तिवादात् पूर्वमेकोनविंशो ब्रह्माश्रयाज्ञाननिरासवादः, चत्वारिंशो जीवाज्ञानभङ्गवादश्च। पञ्चाशः शास्त्राधिकारिभङ्गवादः अष्टमात् साधनचतुष्टयभङ्गवादादुपरीत्येवं बहु तर्कयेम। तथापि चर्चासमये प्रवचनसमये च प्राप्तजिज्ञासानुरोधेन तत्तदंशविशदीकरणवैयग्र्यं प्राप्तमुपपन्नमिति निरूपितरीतिगतक्रमस्य संगतत्वमेव साधुसंलक्षणीयम्। 'अत्र वा वक्तव्यम् तत्र वेति न कश्चिद्विशेषः'' इति च न्यायभाष्यम्। जगन्मिथ्यात्वं बह्वीभिरनुपपत्तिभिः सिषाधयिषूणामाशयान् परीशीलयितुं प्रवृत्तैश्च एकोनपञ्चाशप्रभृतयो

बहवो वादा उक्तानुक्तविषयविशेषचर्चायै विशदमवतारिताः। मतविषय इवाचारविषयेऽप्यद्वैतिनामन्यथामतिरालोडिताऽऽसीत् लयष्षष्टितमादिभिः।

शतदूषण्यां शतादन्यूना एव वादाः आचार्यैरारचिताः। तत्रतत्र वादे (९.१५) कियानपि भाग इव अन्ते बहवो वादा विलुप्ता इतीदं तत्त्वम्। सम्प्रदायसिद्धेऽर्थेऽन्येषां विवादस्य न किञ्चित् फलम्। आचार्यविहितेषु ग्रन्थान्तरेष्विवात्रोपलभ्यमानांशे ग्रन्थावसानविधाया अदर्शनमप्यत्र प्रमाणम्। शतदूषणीमेनां निर्माय चान्ये ग्रन्थाः पश्चादाचार्यैरन्वग्राहिषतेति तदीयग्रन्थत एव स्पष्टम्। यथोक्तं तत्त्वटीकायाम्, "शातितः शतदूषण्यां शङ्करादिमुधाग्रहः। शारीरकशरीरं तु व्यक्तमत्र प्रदर्श्यते" इति। शते चात्र वादेषु केषाञ्चिल्लोप इव क्रमविपर्यासोऽपि लेखकप्रमादात् क्वचित् संभाव्यत इत्यप्याहुः। कथानधिकारवादादौ ग्रन्थभ्रंशश्च प्रामाणिकः। चण्डमारुते प्रतिवादमाचार्यविषयो मङ्गलश्लोकः स्थितः कालक्रमेण नष्ट इति निरूपकाः प्राञ्चः प्राहुः। तथा शतदूषण्यामपि तत्रतत्र वादे मङ्गलश्लोकानां भ्रंशोऽप्यभ्यूह्यते। जिज्ञासानुपपत्ति—भेददूषणनिस्तार—व्यावर्तमानत्वानुमानभङ्ग—आनन्दत्वभङ्गादिष्वनेकेषु वादेषु सन्तः श्लोकाः निरूप्यार्थसंग्राहका अपि न मङ्गलश्लोकाः। चतुश्चत्वारिंशे च द्विपञ्चाशवादमङ्गलश्लोक एव पठ्यते। स तु तत्रैव संगत इतीह श्लोकेनान्येन वादानुगुणेन भाव्यम्। एवं बहुविप्रकृष्टव्यांशसद्भावेऽपि यावद् रक्षितम्, तावदप्यद्वैतिमतसमूलोन्मूलनाय पर्याप्तमिति संतोष्टव्यम्।

अथात्र यस्य जिज्ञासाधिकरणभाष्यस्य प्रायो व्याख्यारूपा शतदूषणी, तद्भाष्यविचारितविषयसूची शतदूषणीवादविषयसूची च श्लोकरूपेण सुखग्रहणाद्यौचित्याय निबध्यते--

1. अथातोब्रह्मजिज्ञासाशब्दानामर्थवर्णनम्।
   ऐकशास्त्र्यं कर्मचिन्ताब्रह्मचिन्ताक्रमौचिती ॥
2. चिन्ताया रागतः प्राप्तिः पूर्वपक्षो लघुस्ततः।
   न वाक्यजन्यज्ञानस्य किंतु भक्तेरुपायता ॥

3. कर्माङ्गिका च सा, यस्मादिष्टं साधनसप्तकम्
न साधनचतुष्कस्य पूर्ववृत्तत्वमित्यथ ॥

4. पूर्वपक्षो महान् यत्र ब्रह्ममात्रस्य सत्यता ।
अविद्याजं जगन्मिथ्येत्यैक्यधीर्मोचनीष्यते ॥

5. प्रबलं शास्त्रमध्यक्षात् श्रुतिष्वैक्यश्रुतिस्तथा ।
सामानाधिकरण्यञ्च स्यादखण्डार्थतत्परम् ॥

6. प्रत्यक्षमपि सन्मात्रग्राहि भेदस्त्वसंभवी ।
ऐक्यं सदनुभूत्योः स्यात् स्वप्रकाशा त्वजा च सा ॥

7. निर्विकारा च निर्भेदाऽप्यात्मा चाहमि नात्मता ।
महासिद्धान्त उपरि निर्विशेषे त्वमानता ॥

8. सविशेषं सर्वमिदं निर्विकल्पमपीदृशम् ।
सन्मात्रग्राहिताभङ्गो भेददूषणदूषणम् ॥

9. जातेः संस्थानता मिथ्यात्वानुमाननिराक्रिया ।
धीसद्भेदो धियश्चानुभाव्यता जन्यतादि च ॥

10. विषयाणां विकाराणां भेदानाञ्चात्र संभवः ।
धीतोऽन्यस्याहमर्थस्य त्वात्मत्वं ज्ञानताऽस्य च ॥

11. ज्ञातृत्वस्याप्यनध्यासः सुषुप्तावप्यहंत्वभा ।
शास्त्रप्रत्यक्षयोर्मध्ये शास्त्रप्राबल्यवारणम् ॥

12. असत्यात् सत्यसिद्धेश्च भङ्गः श्रुतिनिरूपणम् ।
सत्यादिवाक्यस्याखण्डपरत्वस्य निराक्रिया ॥

13. निर्गुणश्रुतिसंकोचो ज्ञेयज्ञातत्वयोःस्थितिः ।
आनन्दत्वानन्दितयोरप्यद्वैतश्रुतेर्गतिः ॥

14. पुराणाद्यर्थसम्यक्त्वमुपबृंहणताऽपि च ।
जीवब्रह्मस्वरूपैक्यनिरासोऽन्यादृशैक्यतः ॥

15. आश्रयस्य तिरोधेश्च स्वरूपस्याप्ययुक्तयः ।

अनिर्वाच्यत्वेऽप्ययुक्तिः प्रमाणस्य च; तत्र च ॥

16. प्रत्यक्षस्यानुमायाश्च ततः सत्ख्यातिचिन्तना ।
श्रुतिस्मृतिपुराणानामविद्यापरताहतिः ॥

17. निवर्तकस्यायुक्तिश्च तत्त्वमस्यर्थशोधनम् ।
सिद्धान्तसारोपन्यासो निवृत्तेरप्ययुक्तता ॥

18. महासिद्धान्तगत्यैवमथशब्दार्थवर्णने ।
सिद्धेऽथाऽऽद्याधिकरणशरीरप्रतिबोधनम् ॥

अथ शतदूषणीवादविषया सूची—

जिज्ञासाधिक्रियाभाष्याद्यनुगा शतदूषणी ।
षट्षष्टौ तत्र वादेषु विषयानुक्रमस्त्वयम् ॥

(1) ब्रह्मशब्दे वृत्त्ययुक्तिः (2) जिज्ञासानुपपन्नता ।
(3) ऐकशास्त्र्यस्थितिः (4) ज्ञेयाविधेयत्वभञ्जनम् ॥
(5) न बाधितानुवृत्तिः स्यात् (6) न स्याद्विविदिषार्थता ।
(7) न प्रत्यक्षं शब्दजन्यम् (8) न साधनचतुष्टयम् ॥
(9) न कथाधिकृतिः (10) न स्यान्निर्विशेषं स्वयम्प्रभम् ।
(11) न निर्विकल्पकं तस्य (12) न सन्मात्रं दृशोः परम् ॥
(13) न भेददूषणम् (14) वेदप्रामाण्यं च परस्य न ।
(15) (16) दृश्यत्वं व्यावृत्तता च न मिथ्यात्वस्य साधनम् ॥
(17) दृग्दृश्ययोगिता (18) बाह्यप्रकाशानुपपन्नता ।
(19) ब्रह्माश्रयाज्ञानहतिः (20) ब्रह्मावेद्यत्वभञ्जनम् ॥
(21) नानुत्पत्तिः (22) नाविकारो (23) नानानात्वञ्च संविदः ।
(24) न निर्विशेषता (25) नास्या आत्मत्वम् (26) अहमस्तु तत् ॥
(27) नाध्यस्ता ज्ञातृता (28) नास्याः साक्षीति व्यपदेश्यता ।
(29) शास्त्रे लोकाविरोधित्वम् (30) सत्यासिद्धिरसत्यतः ॥
(31) जीवन्मुक्तिर्न (32) नो बाधसामानाधिकरण्यवाक् ।

(33) न संविदैक्यम् (34) नैवोपदेशो (35) नैव तिरोधिवाक् ॥
(36) नात्माद्वैतम् (37) न जीवेशाद्वैतम् (38) नाखण्डवाच्यता ।
(39) न भावरूपमज्ञानम् (40) न जीवाज्ञानसंभवः ॥
(41) नाविद्याया स्वरूपोपपत्तिः (42) मायैक्यमत्र च ।
(43) न निवर्तकमस्याः (44) न निवृत्तिश्चोपपद्यते ॥
(45) न ब्रह्म शब्दावेद्यम् (46) न निष्प्रपञ्चीकृतेर्विधिः ।
(47) न विकल्पाप्रमाणत्वम् (48) नोपबृंहणबाधनम् ॥
(49) नैक्योपदेशार्थापत्तिः (50) न सिद्धिरधिकारिणः ।
(51) न निर्विषयता मुक्तचितो (52) निर्गुणवाग्गतिः ॥
(53, 54) न ब्रह्ममायोपादानत्वार्थापत्ती स्त इत्यपि ।
(55) न कार्यानुपपत्तिः (56) नानन्त्यतत्त्वञ्च (57) निर्गुणे ॥
नानन्दत्वं (58) न नित्यत्वम् (59) अद्वितीयश्रुतेर्गतिः ।
(60) सत्त्वासत्त्वविवेको (61) ऽथो जीवस्यैकत्वभञ्जनम् ॥
(62) शूद्राधिकारापत्तिश्च (63) न कर्माधिक्रियाक्षतिः ।
(64) न यतिः परीत्या स्यात् (65) अलेपकमतं न सत् ॥
(66) न ब्रह्मसूत्रस्वारस्यं स्यात् परेषां मतेऽन्ततः ।

इत्थमर्थास्तु षट्षष्टिर्भाष्यव्याख्यात्मनोदिताः ॥

इत्थं वादान् शतं चक्रे ; दृष्टे पूर्तेरदर्शनात् ।
ग्रन्थान्तरेष्विवात्रापि लोपो रक्षणहानितः ॥

श्रुतितः स्मृतितश्चेतिहासतश्च पुराणतः ।
अद्वैतस्यास्ति दूष्यत्वं पूर्णभाष्यार्थवर्णनात् ॥

शतदूषणी हि परमर्थभूषणप्रकटस्वकान्तिरनघाऽञ्जसाऽनिशम् ।
शतभूषणीमुखविभूषणेऽपि तन्मतदूषणानि निपुणं प्रदर्शयेत् ॥

इति सर्वसज्जनविधेयः
उत्तमूर—ति. वीरराघवाचार्यः



श्री. उत्तमूर्——वान्मयसच्चक्रवर्ति-

**अभिनवदेशिक वीरराघवाचार्याः**

# INTRODUCTION
## TO
# PARAMARTHABHUSHANA

By

Dr. S. M. SRINIVASACHARI, M.A., Ph. D. (Madras)

*(Author of the Thesis in English on the Study of Satadushani)*

The Paramarthabhusanam of Sri Uttamur Viraraghavacharya Swami seeks to give an elucidation of the arguments contained in Vedanta Desika's *S*atadusani, with a particular reference to the criticisms made in the *S*atabhusani and other earlier Advaita works against visistadvaita. The *S*atadusani is an important classic of Visistadvaita system of Vedaanta in which, as its title suggests, one hundred philosophic issues have been chosen for systematic criticism directed against the system of Sri Sankara and his followers. The book as available at present contains only sixty-six vadas, the rest having been lost. These are mainly based upon the arguments contained in the Jijnasadhikarana of Ramanuja's *Sri* Bhasya. The arguments which are stated very briefly by *Sri* Ramanuja are elaborated by Sri Desika with his metaphysical profoundity and mastery over the art of disputation.

---

## SUBSTANCE OF THE SATADUSHANI.

The Vadas contained in the Satadusani, each one of which is devoted to a discussion of an independent controversial topic, refer to various issues bearing on epistemological, metaphysical, cosmological, religious and ethical problems. These may be grouped under the eight broad headings 1. Pramanas and their validity, 2. Perception and Difference, 3. The nature of Consciousness (*Anubhuti*), 4. The Individual Self and the Absolute, 5. The Nirguna Brahman, 6. The illusoriness of the Universe, 7. The doctrine of Avidya and 8. Sadhana and Mukti.

(1) The discussion regarding the Pramanas is confined to the controversial issue whether the Pramanas that are not absolutely real can be an evidence of what is real (vada 30). The Advaitin's view is that pramanas even though illusory in character, can reveal what is ultimately real. The main argument adduced in support of it is that such a thing is found possible in our ordinary experience when a rope, for instance, which is mistaken for a snake causes fear. This view is critically examined in all its aspects and the conclusion reached is that what is not real can never reveal what is real. It is also pointed out that if the Pramanas do not have a real existence metaphysical discussion cannot be carried on (Vada 9). On the same ground it is also held that scripture,

Sri Vedanta Desika has covered in *this work* all the important doctrines of Advaita Vedanta. The criticisms offered by him are not only effective but are very comprehensive leaving little scope for the opponent to defend his position. In examining the Advaitin's theory, Sri Vedanta Desika follows the traditional dialectical method. The prima facie view is first stated; it is analysed resolving the theory into several alternatives; each one of the alternatives is then subjected to a critical examination and refuted on the ground of its untenability. In resolving a theory into alternatives, all possible objections of the opponent—those that may be found in the available Advaita Classics and those that may be anticipated from later thinkers—are mentioned and criticised. The criticism is made on different grounds and from different standpoints. The Advaitin's theory is refuted by showing that it is not warranted by the scriptural texts and other accepted pramanas, It is also criticised on the grounds of inherent contradictions and other logical defects. Criticism is attempted not only on the basis o one's own position (*Siddhanta*) but also on that of the opponent

too cannot be claimed as the ultimate authority in spiritual matters in so far as there is nothing to distinguish it from the so called non-authoritative sacred texts of the Buddhists, since scripture like perception has for its source Avidya a defect (Vada 14). Nor is it possible to claim a superior validity to scripture over perception in case a conflict arises between the two (Vada 29).

(2) The discussion on 'Perception and Difference' is centred round the important epistemological issue, viz, whether perception reveals pure 'Being' or difference. The prima facie view that comes up for criticism here is that perceptron is of the one real, difference being subsequently superimposed thereon. The verve of the argument put forth in support of this claim is that difference being a relative notion is dependent for its cognition on the knowledge of its counter-correlate and substrate while 'Being' is not so. Secondly, the concept of difference when subjected to logical examination does not stand the test and as such it is not real. Both the aspects of the problem are discussed at great length with particular reference to the examination of the dialectic on difference. The conclusion reached is that difference is real as is logically intelligible and it is also revealed in perception (Vadas 12 and 13). In this connection the theory of determinate and indeterminate perception is also discussed (Vada 11) and the correct definition of the *nirvikalpaka* and the *savikalpaka* perception as understood by the Visistadvaita school of thought is pointed out,.

(3) The discussion on the '*Nature of the Consciousness*' is mainly directed to the examination of the Advaitin that Consciousness is identical with the Reality, that it is indeterminate in character, that it is one homogeneous whole which is neither produced nor destroyed but self-luminous and lastly that it is the very self in us. The arguments, mostlv in the form of inferences, that are

by exposing its hollowness. With his penetrative intellect, comprehensive knowledge and mastery of dialectics, Sri *Vedanta Desika* was able to refute Advaita *Vedanta* and establish *Visistadvaita* on a sound and firm foundation. (It may be for this reason that for more than six hundred years no one ever attempted to write a rejoinder to the *Satadusani*, as was attempted in the case of *Nyayamrta* of *Vyasaraya*.)

Sri Sastriar has now ventured to write a rejoinder to Sri *Vedanta* Desika's *Satadusani*, a task which was not undertaken by eminent thinkers such as Sri Vidyaranya, Appayya Dikshita and Madhusudana Saraswati who were pre-eminently qualified for it. We should however welcome this since it has provided a stimulus for further study of the classical literature of *Vedanta* schools. It has brought into limelight the *Satadusani* and rekindled thought and research regarding the merit of the two systems of *Vedanta*.

Satabhusani attempts to examine all the vadas of the Satadusani except two considered by it as inapplicable to the Advaitins. Thus, the book contains 64 topics, each one devoted to an examination of the corresponding topic of the *Satadusani*. The book is held in high esteem by the Advaita scholars as is evident from

---

put forth in support of these contentions, are critically examined and each one of them is refuted by showing the logical fallacies involved in them and also their opposition to the ordinary experience on the one hand and scriptural texts on the other. The criticism is mainly based on the theory that consciousness is that which involves the duality of the subject and object and as such it is the characteristic feature of the Self. It is determinate in character. Although it is self-luminous, it is not absolutely unknowable. It is not one but many and is subject to change in the form of contraction and expansion (Vadas 10, 20, 21-25.)

(4) The discussion on—*The Individual Self* and *The Absolute* covers the most important ontological issue viz., whether or not the individual self is identical with the Absolute. The Advaitin who answers it in the affirmative maintains that the individual self is the Absolute conditioned by the nescience or Avidya, and with the removal of the Avidya the finite self becomes identical with the Absolute. True self then is one only and not many. The plurality of the individual self may be due to the reflections of the Absolute inthe internal organs—the product of Avidya—comparable to the reflections of the single moon in the waves, or it may be due to the Absolute which is pure consciousness being conditioned by the internal organs just as the cosmic ether is conditioned by pot etc. These arguments are discussed in great detail and set aside on the ground that they are directly in conflict with our experience and secondly that they do

the numerous testimonials appended to the book, where it is claimed that the Satabhusani has provided appropriate answers to the criticisms levelled by Sri Vedanta Desika against Advaita.

Our learned author, Sri Uttamoor Viraraghavacharya Swami has ably demonstrated in the Paramarthabhusnam that Sastriar has hardly provided any satisfactory reply to Sri Desika's criticisms and that Sastriar has not interpreted correctly the doctrines of Visistadvaita as expounded by Sri Ramanuja and developed by Sri Desika.

Sastriar has not attempted to give a direct answer to the criticism of Vedanta Desika. He first gives an exposition of the Advaita doctrine rather elaborately, drawn from the Advaita classics such as, Brahma-Siddhi Ista Siddhi, Bhamati and Vivarana; then he mentions a few sentences and sometimes the whole paragraph from the original text of the Satadusani and concludes with the remark that the Satadusani (the arguments advanced in the Satadusani) stands refuted (or commented 'etena...Satadusani Vyakhyata'). In what manner and to what extent the criticisms levelled by Sri Desika against the Advaitin are refuted is a puzzle which the reader will have to resolve for himself. One should take it for granted that the criticisms are answered. A critical work of this nature should have stated the main points of criticism of the opponent and then offered a direct and satisfactory reply to them. In the absence of

---

not have the support of scriptural texts. The conclusions reached are that the entity denoted by the notion 'I' is the individual self, it is the knower, that it is different from individual to individual, and lastly that it is not identical with the Absolute though it is organically related to it (Vadas 26, 27, 36 & 37).

(5) The discussion on Brahman is confined to the fundamental ontological issue whether the Absolute or Brahman is Saguna or Nirguna in character. This is examined at great length with particular reference to the Advaitin's contention that the upanishadic text referring to Brahman as *Satyam*, *Jnanam*, and *Anantam* conveys an impartite and non-relational sense (Akhandartha). It is pointed out that neither the scriptural texts in general nor the smriti texts nor the vedanta sutras teach the doctrine of Nirguna Brahman (vadas 52, 38, 48 and 66). It is also urged that if Brahman is devoid of all characteristics, it cannot be conceived as blissful (*Ananda*, and eternal (Vadas 57-58).

(6) The discussion on the 'Universe' is focussed on three important issues; (i) the illusory character of the Universe, (ii) the relationship of the universe to the Brahman, (iii) the concept of casuality. Regarding the first issue the various arguments of the Advaitin to prove the illusoriness of the universe are examined and are shown to be untenable (Vadas 15, 16, 17 and 32). Regarding the second and the third issues the question is raised whether or not Brahman is the material

such a methodology, Satabhusani cannot be regarded as a rejoinder to the Satadusani.

In the opinion of the Visistadvaita scholars, Sastriar's book does not deserve any serious consideration. Nevertheless Sri Uttamoor Viraraghavacharya Swami has examined it critically in order to remove the misconceptions created by Sastriar and other advaita scholars about the essential doctrines of Visistadvaita, for the benefit of the discerning scholars of all times. As he has rightly pointed out in his Bhumika, it is very essential to remove the wrong impression created in the minds of laymen. Though the work may now be regarded as quite unimportant—it may assume importance at a later date if left unanswered. Hence, it has become necessary to provide a suitable reply to it. Our author has no intention of attacking either

---

cause and if so in what sense. The *Parinama Vada* is upheld as against the *Vivarta Vada* of the Advaitin which is shown to be untenable. The dialectic of the Advaitin on the Concept of Causality is examined to show that the concept is logically unintelligible.

(7) The discussion on the doctrine of Maya which is very elaborate is concerned with the demonstration of its untenability from different points of view. First, its very nature (*svarupa*) is unintelligble. Secondly, it's description as some thing inexplicable is a self-contradiction. Thirdly, it cannot be established by any pramanas. Fourthly, neither Brahman nor the Jiva can be its locus. Fifthly its function as obscuring the true nature of the Reality is unintelligble. Sixthly, the knowledge which can remove this is untenable. Lastly, the very conception of its cessation a riddle. (Vadas 19, 35, 39-44).

(8) The last heading—*Sadhana and Mukti*—covers mainly the issues arising out of the interpretation of the first sutra of Badarayana. The most important of these refers to the question whether the *Sadhana Catustaya* accepted by Sankara do invariably precede Brahmajijnasa. The view of the Advaitin is subjected to a detailed critical examination and it is shown that the discrimination between eternal and non-eternal etc. is possible only after the study of the Vedanata but not prior to it. What therefore precedes Bhahmajijnasa is the study of the Purva Mimamsa (Vada 8). To establish this theory the relationship between the Purva mimamsa and Uttara Mimamsa is discussed elaborately to prove that the two constitute one integral whole (Vada 3). The place of Karma in the philosophic discipline is also considered and it is established that the performance of Karma is obligatory to every individual and it is the direct means to Vedana or the knowledge of Brahman (Vada 6). The issue whether knowledge alone is the means to Moksa is also discussed and it is pointed out that mere knowledge generated by the upanishadic texts (without Bhakti yoga etc) cannot be the means to Moksa in so far as it does not remove Avidya (Vada 4).

This, in brief, is the substanceof the Satadushani.

Sri Sastriar or his book, just for the sake of criticism. His main object is to bring out the correct implications of the arguments, advanced by Sri Desika in the *Satadusani*. It is for this purpose that a critical examination of *Satabhusani* has been undertaken.

Though the study is mainly confined to the Satabhusani, our author has attempted to provide answers to the objections raised against Visistadvaita even in other Advaita works. For this purpose an extensive study of all the important Advaita classics has been made. The Paramarthabhusnam is thus a constructive work giving a detailed and correct exposition of Visistadvaita Philosophy as expounded by Sri Ramanuja on the basis of the teachings of eminent sages of ancient lore and further strengthened by the monumental works of Sri Vedanta Desika, keeping in view the criticisms that have been offered by the Advaitins.

The work is undertaken purely in an academic spirit with a view to promoting further study of the Vedantic literature and better understanding of the two systems of Vedanta—Advaita and Visistadvaita—propounded by two master-minds. It is hoped that this book will be a useful contribution to the study of Vedanta systems in general and Visistadvaita in particular. The learned author, Sri Uttamur Viraraghavacharya Swami, who has been labouring hard for the past several years to popularise Visistadvaita Vedanta by means of publication of several important works, has rendered a conspicuous service not only to the Visistadvaitins but to all students of Indian Philosophy by bringing out this scholarly and valuable book. The book deserves the careful attention of all that are interested in Indian thoughts and particularly of those that wish to study Vedanta in its several bearings.

Ministry of Education,
New Delhi
26th March '59

S. M. SRINIVASACHARI.

श्रीः

# विषयसूची

**जिज्ञासानुपपत्तिवादः** 146-171



**ऐकशास्त्र्यवादः** 172-218

## साधनचतुष्टयवृत्तत्वभङ्गः



## कथानधिकारवादः



## निर्विशेषस्वयम्प्रकाशत्वभङ्गः

## व्यावर्तमानत्वभङ्गः 461-479



## दृग्दृश्यसंबन्धप्रमाधनम् 480-501



## बाह्यप्रकाशानुपपत्तिः 502-513

ाश्रयाज्ञानभङ्गः 514-526



ात्वभङ्गः 527-540



ांविदनुत्पत्तिभङ्गः 540-552



संविन्निर्विकारत्वभङ्गः 552-558



संविदनानात्वभङ्गः 559-572



निर्विशेषत्वानुमानभङ्गः
5,2-856

## असत्यात् सिद्धिभङ्गः 677-688



## जीवन्मुक्तिभङ्गः 689-703



## बाधार्थत्वभङ्गः 703-716

शुभमस्तु

शुभमस्तु

# LIST OF DONORS

**who have liberally contributed for this work**

1. Sri Ahobilamatt Sri Sannidhi
2. Sri Sridharacharya Swamiji
   Sri Uttarahobilamatt, N. India
3. Sri Nerur Pandit Narayana Ayyangar, Karur
4. Sri V. T. Vedanta Ramanujachar, Advocate,
   Poondamalli
5. Sri Nerur Krishnaswami Ayyangar, Karur
6. Sri R. Gopalaswami Ayyangar, Advocate,
   T. Nagar
7. Sri S. V. S. Ramanujam, Retd. P. W. Inspector,
   Salem
8. Sri N. S. Krishnaswami, (Principal G. C. T.)
   Coimbatore
9. Sri K. S. Srinivasacharya, Progressive Printers,
   Madras
10. Sri K. Bhashyam, Advocate. Mylapore.

*Regarding collections from other sources also a complete list in detail will be published in "Satadushanee Sara"*

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः

श्रीमद्भ्यो वेदान्तरामानुजमहादेशिकेभ्यो नमः

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमते भगवद्रामानुजाय नमः

श्रीनिवासपरब्रह्मणे नमः

# परमार्थभूषणम्

श्रीशं देवं वृषगिरिरतं श्रीमतस्तीन् मुनीन्द्रान्
श्रुत्यन्तार्यान् अखिलकथकक्षेपिसत्तर्कसूक्तीन् ।
आचार्यानप्यनघधिषणान् रङ्गरामानुजाख्यान्
नत्वा सम्यक् परमतगतीरद्य निर्मूलयामि ॥ १

विनायकपितामहे व्यपहृतश्रुतावात्मजे
निगृह्य मधुकैटभौ कृतहितं हयास्यं परम् ।
गजास्यपतिसेवितं गजविपक्षवक्त्रादितां
भजामि कवितार्किकद्विरदसिंहताख्याऽऽस्थितम् ॥ २

परपक्षनिराकृतिप्रसिद्धाः गुरवोऽतिस्थविराः ; तथापि शिष्याः ।
प्रभवन्ति परीक्षितुं प्रबन्धान् परकीयान् शतभूषणीं तथाऽन्यान् ॥ ३

प्रागेव खण्डिता इष्टब्रह्मनैष्कर्म्यसिद्धयः ।
श्रीभाष्यकारप्राचार्यैः सिद्धित्रयविधायिभिः ॥ ४

शाङ्करव्याकृतीः प्राच्यनव्यप्रस्थानभेदिनीः ।
परास्य प्राच्य एवाध्वा भाष्यकृद्भिः परिष्कृतः ॥ ५

अक्षानुमानश्रुतिसूत्रमुख्यप्रमाणदूरान् खलु कल्पयन्ति ।
तर्काप्रतिष्ठाविहिताव्यवस्थान् अद्वैतिनोऽर्थान् अखिलांश्दुःस्थान् ॥

तर्कप्रमाणनिबिडां शतदूषणीं यः सम्यग्विभावयितुमप्यसमर्थ ईदृक् ।
यं कञ्चिदंशमयथावदनूद्य पूर्वक्षिप्तं पठन् बत मतः खलु खण्डकोऽद्य ॥

उक्तानुक्तसमस्तकल्पकलितं कृत्वा विकल्पं क्रमात्
अद्वैतं शतदूषणी विदलयत्याम्नायसंरक्षिणी ।
आपातव्यवहारमात्रनियतं चाद्वैतमद्यत्व इ-
त्याहत्ये सगुणाध्वनि स्थितिमतामद्वैतमानो वृथा ॥ ८

को दोषः कश्च जीवः स्यात् कश्चेशः का च देवता ।
कथञ्च सृष्टिरित्याद्यम् अद्वैतेऽत्राव्यवस्थितम् ॥ ९

अथाप्यज्ञमतिक्षिप्त्यै तत्त्वव्युत्पादनाय च ।
प्राच्यनव्यबहुग्रन्थपरीक्षार्थोऽयमुद्यमः ॥ १०

श्रियः प्रियस्याखिलहेयप्रत्यनीकस्यानवरूपगुणविभूतिविस्तारस्यानन्ताव-तारस्यानर्घोपदेशभूतम् अनादिनिधनाविच्छिन्नसंप्रदायनिगमनिकरपाञ्चरात्रगी-तादिकं भगवद्बादरायणबोधायनादिपरमर्षिप्रणीतभारतशारीरकब्रह्मसूत्रवृत्त्यादि च सामग्र्येण समीक्ष्य सर्वसामरस्यवहं विशिष्टाद्वैतामृतमनादिसमयसंरक्षितम् अशेषेभ्यः सुमनोभ्यः प्रदाय वेदबाह्यकुदृष्टिक्षोभपरिहरणेन प्राणिनः परमया करुणया ररक्षुर्भगवद्रामानुजस्वामिचरणा इतीदं खलु निश्चप्रचमेव । तमिमं विशिष्टाद्वैतसिद्धान्तमनुरुध्य पारमैकान्त्यभूषितायां वृत्तौ प्रतिष्ठां प्राप्तवद्भ्यो महद्भ्योऽभ्यसूयुषु परमतस्थेषु सिद्धान्तक्षोभणाय वादकोलाहले

शिकाः विष्वग्व्यापिन्यगाधे यतिनृपतिवचस्संपदेकार्णवे श्रद्धाशुद्धावगाहैः
भ्रमतिमिरमिषिक्ताः वादेषु सर्वान् परान् पराजित्य तदाप्रवृत्तवादार्थ-
ग्रहक्रमेण सर्वपरग्रन्थपरिशीलनपूर्वं श्रीभाष्यव्याख्यारूपां शतदूषणीम्,
आज्ञा यथोदितमिदं शुकवत् पठन्तः प्रच्छन्नबौद्धविजये परितो यतध्वम्"
युपदिश्य निर्माय प्राज्ञेभ्यः प्रतिपादयामासुः । विशिष्टविद्यासंपन्नाः
द्यारण्यादयोऽपि ग्रन्थरत्नमिदमवलोक्य प्रतीकारासक्षमा जोषमासतेति विश्व-
सिद्धमिति शतभूषणीग्रन्थोऽप्यनुवदति । तेषां तर्के विशेषतोऽवगाहनं नासी-
ति तथेति चेत्—तर्हि गुदूर शतभूषणीकारः । न वयं विद्यारण्यादिभ्यो
शिष्टाः प्राज्ञमणयो न भवन्ति भविष्यन्ति वेति ब्रूमः । किंतु विशिष्ट-
दुष्यैरपि खण्डयितुमशक्यां शतदूषणीमर्वाचीनाः विद्यारण्यादितोऽप्यल्पवैदुष्याः
बोद्धुमपि प्रगल्भन्ते; दूरं तु खण्डने इत्येतावदेव । गते गणरात्रे प्रादुर्भूताः
कृष्णज्ञाननिधयोऽप्यप्पय्यदीक्षितादयोऽपि चण्डमारुतकारमहाचार्यादिसमसाम-
काः अतिप्रसङ्गं नाद्रियन्ते । यदा ताटस्थ्येन मतानां परिशीलनम्,
ो गृहीतचरमतपरित्यागेन सम्यक्तयाऽवभाते मते प्रवेशोऽपि समादर्तव्यो
सत्; प्राक्काले समादृतश्चासीत । अधुनातनास्तु जातिमिव मतमपि याव-
युषम अपृथक्सिद्धं मन्यन्ते । न वैष्णवाः शैवा बुभूषन्ति, न शैवाः वैष्ण-
: । नाप्यद्वैतिनः द्वैतिनः । तत साम्प्रतं परमतदूषणसंरम्भः नापेक्षितोऽ-
। प्रत्युत पारस्परिकप्रद्वेषाभिवर्धनेन बाह्यानां छिद्रप्रदानमेव फलत्यय-
भिनिवेशः । अथ बुद्धिवैशद्यसंपिपादयिषया परमतखण्डने प्रवृत्तिः, न तर्हि
। पांसुभिरवकीर्य अर्हतूनपि हठात् उपक्षिप्य अभिनिवेशेन यत्किञ्चिद्विलिख्य
जयाभिमानिता पदमाधातुमिति । एवं स्थितेऽपि अद्यत्वे शतभूषणीति
भाषितनूरणिग्रामवास्तव्यस्य प्रियसुहृदो विदुषो मुखेन शतभूषणी-
त्रैव शतदूषणीखण्डनग्रन्थः कश्चित अद्वैतिभिः सर्वैः संभूतैः प्रकाशं
पितोऽस्ति । विशिष्टाद्वैतपण्डिताश्च ग्रन्थमिमं पश्यन्तः, किमनेन तद्व्युत्पत्ति

